# प्राक्कथनम्

## (प्रथमावृत्तेः)

*बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।*
*अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ।।*

*इत्येवं कविः भर्तृहरिः सुभाषितविषये खेदं प्रकटयति । प्रायः इदानीं संस्कृत-संस्कृत्योः परिस्थितिः अपि एवम् एव अस्ति । ज्ञातव्याः विषयाः बहवः । किन्तु बोद्धा कः ? येषां विषये अस्माभिः साभिमानैः भवितव्यं, तादृशानां विषये एव वयम् अज्ञानिनः ! अहो, विधिविलसितम् !!*

*संस्कृत-संस्कृतिसागरे स्थिताः केचन बिन्दवः अत्र सङ्गृहीताः । प्राथमिकाः अंशाः केवलम् अत्र ज्ञापिताः । अधिकतया प्रश्नोत्तररूपेण विषयाः निरूपिताः इत्यतः 'रसप्रश्नाः' इति नाम ।*

*अत्र कोऽपि विषयः नूतनतया न उल्लिखितः । अन्यान्यग्रन्थेषु प्रस्तुताः विषयाः अत्र सङ्गृहीताः । तान् ग्रन्थान् वयं सकर्तज्ञ्यं स्मरामः । मुद्रकान् इतरकार्यकर्तॄन् च कृतज्ञतापूर्वकं स्मरामः एव । अग्रिमावृत्तेः परिष्कारे सौन्दर्यवर्धने च भवतां संसूचनानां हार्दं स्वागतम् ।*

**- प्रकाशकः**

## (चतुर्थावृत्तेः)

*'रसप्रश्न'पुस्तकस्य चतुर्थावृत्तिः इदानीं प्रकाश्यमाना अस्ति । एतदवसरे सहकृवतः सर्वान् बन्धून्, मुद्रणकारं च सकार्तज्ञ्यं स्मरामो वयम् ।*

*बहुधान्य सं।। चैत्रशुक्लसप्तमी* **- प्रकाशकः**

*३-४-९८*

# अन्तरङ्गम्

ॐ

# १. साहित्यम्

*** महाभारतस्य मङ्गलपद्यम् एतत् -**

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयम् उदीरयेत् ।।

*** महाभारते कति पर्वाणि सन्ति ? तानि च कानि ?**

अष्टादश पर्वाणि -

१. आदिपर्व २. सभापर्व ३. अरण्यपर्व
४. विराटपर्व ५. उद्योगपर्व ६. भीष्मपर्व ७. द्रोणपर्व
८. कर्णपर्व ९. शल्यपर्व १०. सौषुप्तिकपर्व
११. स्त्रीपर्व १२. शान्तिपर्व १३. आनुशासनिकपर्व
१४. अश्वमेधपर्व १५. आश्रमवासिकपर्व १६. मौसलपर्व
१७. महाप्रस्थानपर्व १८. स्वर्गारोहणपर्व ।

*** महाभारतयुद्धं कति दिनानि प्राचलत् ?**

अष्टादश दिनानि ।

*** महाभारतयुद्धे द्वयोः पक्षयोः सैन्यप्रमाणं किम् ?**

अष्टादश अक्षौहिणी ।

*** महाभारतस्य कस्मिन् पर्वणि भगवद्गीता अस्ति ?**

भीष्मपर्वणि (२५-४२)

*** भगवद्गीतावैशिष्ट्यम्-**

१) भगवद्गीतां श्रीकृष्णः अर्जुनाय महाभारतयुद्धसमये बोधितवान् ।

२) भगवद्गीतायां भक्तियोगः, कर्मयोगः, ज्ञानयोगः इत्यादयः विषयाः उक्ताः सन्ति ।

३) भगवद्गीतायाम् अष्टादश अध्यायाः सन्ति । ७०० श्लोकाः सन्ति ।

४) भगवद्गीतायाः प्रसिद्धः कश्चन श्लोकः -

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ।।

*** भीष्मस्य जन्मनाम किम् ? पिता च कः ?**

देवव्रतः । पिता - शन्तनुः ।

*** रामायणे कति काण्डाः सन्ति ? ते के ?**

सप्त काण्डाः -

बालकाण्डः, अयोध्याकाण्डः, अरण्यकाण्डः, किष्किन्धाकाण्डः, सुन्दरकाण्डः, युद्धकाण्डः, उत्तरकाण्डः च ।

*** क्रौञ्चवधकाले वाल्मीकेः मुखात् आगतः श्लोकः -**

मा निषाद प्रतिष्ठां त्वम् अगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनात् एकम् अवधीः काममोहितम् ।।
(एषः एव श्लोकः रामायणस्य मूलप्रेरकः अभवत् ।)

*** वाल्मीकिरामायणम् आधारीकृत्य संस्कृतेन उपनिबद्धाः अन्ये रामायणग्रन्थाः -**

आध्यात्मरामायणम्, आनन्दरामायणम्,
अद्भुतरामायणम्, वसिष्ठरामायणम् इत्यादयः ।

* **अष्टादश पुराणानि –**

म-द्वयं भ-द्वयं चैव ब्र-त्रयं व-चतुष्टयम् ।
अ-ना-प-लि-ङ्ग-कू-स्कानि पुराणानि प्रचक्षते ।।

१. मत्स्यपुराणम् २. मार्कण्डेयुराणम् ३. भागवतपुराणम्
४. भविष्यपुराणम् ५. ब्रह्माण्डपुराणम् ६. ब्रह्मपुराणम्
७. ब्रह्मवैवर्तपुराणम् ८. विष्णुपुराणम् ९. वायुपुराणम्
१०. वामनपुराणम् ११. वराहपुराणम् १२. अग्निपुराणम्
१३. नारदपुराणम् १४. पद्मपुराणम् १५. लिङ्गपुराणम्
१६. गरुडपुराणम् १७. कूर्मपुराणम् १८. स्कान्दपुराणम्

* **उपपुराणानि –**

१. विष्णुधर्मपुराणम् २. विष्णुधर्मोत्तरपुराणम् ३. नारसिंहम्
४. बृहन्नारदीयम् ५. क्रियायोगसारः ६. देवीपुराणम्
७. कालिकापुराणम् ८. देवीभागवतम् ९. महाभागवतम्
१०. शिवपुराणम् ११. शिवरहस्यम् १२. एकाम्रपुराणम्
१३. शाम्बपुराणम् १४. गणेशपुराणम् १५. मुद्गलपुराणम्
१६. भविष्योत्तरम् १७. बृहद्धर्मपुराणम् १८. भार्गवपुराणम्
(उपपुराणानां सङ्ख्या विपुलं दृश्यते) ।

* **पञ्च महाकाव्यानि, तेषां रचयितारः च –**

रघुवंशः – कालिदासः ।
कुमारसम्भवम् – कालिदासः ।
किरातार्जुनीयम् – भारविः ।
शिशुपालवधम् – माघः ।
नैषधीयचरितम् – श्रीहर्षः ।

*** एकैकस्य कवेः एकैकं वैशिष्ट्यम्, तच्च -**

उपमा कालिदासस्य भारवेः अर्थगौरवम् ।
दण्डिनः पदलालित्यम् माघे सन्ति त्रयो गुणाः ।।

*** कालिदासस्य कृतयः काः ?**

नाटकानि - अभिज्ञानशाकुन्तलम्, विक्रमोर्वशीयम्, मालविकाग्निमित्रम् ।
महाकाव्यद्वयम् - रघुवंशः, कुमारसम्भवम् ।
खण्डकाव्यद्वयम् - मेघदूतम्, ऋतुसंहारः ।

*** रघुवंशस्य मङ्गलपद्यम् एतत् -**

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।

*** पञ्चमहाकाव्यानाम् अपि व्याख्याकर्ता प्रसिद्धः कश्चन अस्ति । सः कः ?**

मल्लिनाथः ।

*** कवीनां जनप्रियविशेषणानि -**

दीपशिखा - कालिदासः ।
घण्टा - माघः ।
छत्र - भारविः ।
तुरङ्ग - बाणः ।
अनङ्ग - हर्षः ।
इन्दु - मुरारिः ।
यमुना - त्रिविक्रमः ।
कर्णिकार - मङ्खः ।

*** 'भट्टिकाव्यं' कविना केन नाम्ना आहूतम् ?**

रावणवधम् इति नाम्ना ।

*** बिल्हण-कल्हणयोः ऐतिहासिकग्रन्थौ कौ ?**

बिल्हणस्य - विक्रमाङ्कदेवचरितम् ।
कल्हणस्य - राजतरङ्गिणी ।

*** संस्कृतस्य काश्चन कवयित्र्यः -**

शीलाभट्टारिका, तिरुमलाम्बा, विज्जिका, विजया, गङ्गादेवी, रामभद्राम्बा, देवकुमारिका, क्षमाराव् ।

*** संस्कृतस्य प्रथमः चम्पूग्रन्थः कः ? तस्य कर्ता च कः ?**

नलचम्पूः - त्रिविक्रमः ।

*** अद्यावधि रचिताः चम्पूग्रन्थाः कति ?**

सामान्यतः २४५ (प्रकाशितानि - सामान्यतः ७५) ।

*** संस्कृते एतच्छतकतः पूर्वं प्रकाश्यतां गतानि (पुस्तकरूपेण नाम्ना वा) रूपकाणि कति ?**

सामान्यंतः ६५०

*** दश रूपकाणि उदाहरणं च -**

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ।।

नाटकम् - शाकुन्तलम्, मुद्राराक्षसः ।
प्रकरणम् - मृच्छकटिकम्, मालतीमाधवम् ।
भाणः - लीलामधुकरः ।
प्रहसनम् - लटकमेलकम्, धूर्तचरितम् ।

डिमः - त्रिपुरदाहः ।
व्यायोगः - सौगन्धिकाहरणम्, मध्यमव्यायोगः ।
समवकारः - समुद्रमथनम् ।
वीथी - मालविका ।
अङ्कः - शर्मिष्ठाययातिः ।
ईहामृगः - कुसुमशेखरविजयः ।

*** संस्कृते अतिप्राचीनस्य रूपकस्य नाम किम् ? कर्ता च कः ?**

शारीपुत्रप्रकरणम् - अश्वघोषः ।

*** शाकुन्तलस्य नाम कविना किम् इति निर्दिष्टम् ?**

अभिज्ञानशाकुन्तलम् ।

*** शाकुन्तलस्य वैशिष्ट्यम् एषः श्लोकः ज्ञापयति -**

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ।।

*** भासनाटकचक्रे कति रूपकाणि सन्ति ? तानि कानि ?**

त्रयोदश रूपकाणि । तानि च -

१. बृहत्कथायाः आधारेण - प्रतिज्ञायौगन्धरायणम्, स्वप्नवासवदत्तम्, अविमारकम् ।
२. रामायणकथाधारेण - प्रतिमा, अभिषेकः ।
३. भागवतस्य आधारेण - बालचरितम् ।
४. महाभारतस्य आधारेण - पञ्चरात्रम्, मध्यमव्यायोगः, दूतवाक्यम्, दूतघटोत्कचः, कर्णभारम्, ऊरुभङ्गम् ।
५. कल्पितकथाधारेण - चारुदत्तम् ।

* **भासनाटकानि अन्विष्य सङ्गृह्य 'भासनाटकचक्र'नाम्ना कः प्रकाशितवान् ?**

टि. गणपतिशास्त्री । (क्रि.श.१९१० तमे वत्सरे)

* **उपरूपकाणि - तेषाम् उदाहरणानि च -**

१. नाटिका - रत्नावली, विद्धशालभञ्जिका ।
२. त्रोटकम् - विक्रमोर्वशीयम्, स्तम्भितरम्भः ।
३. गोष्ठी - रैवतमदनिका ।
४. सट्टकम् - कर्पूरमञ्जरी ।
५. नाट्यरासकम् - नर्मवती, विलासवती ।
६. प्रस्थान(क)म् - शृङ्गारतिलकम् ।
७. उल्लाप्यम् - देवीमहादेवम् ।
८. काव्यम् - यादवोदयः ।
९. प्रेङ्खणम् - वालिवधम् ।
१०. रासकम् - मेनकाहितम् ।
११. संलापकम् - मायाकापालिकम् ।
१२. श्रीगदितम् - क्रीडारसातलम् ।
१३. शिल्पकम् - कनकावर्तमाधवम् ।
१४. विलासिका - ?
१५. दुर्मल्लिका - बिन्दुमती ।
१६. प्रकरणिका - ?
१७. हल्लीशः - केलिरैवतकम् ।
१८. भाणिका - कामदत्ता ।

* **केचन कथाग्रन्थाः, तेषां कर्तारः च -**

पञ्चतन्त्रम् - विष्णुशर्मा ।

हितोपदेशः - नारायणभट्टः ।
कथासरित्सागरः - सोमदेवः ।
बृहत्कथा - गुणाढ्यः ।

*** गद्यग्रन्थे कति प्रकाराः ?**

प्रकारद्वयम् - कथा आख्यायिका चेति ।

*** आख्यायिकायाम् अध्यायस्य किं नाम ?**

आश्वासः ।

*** उपलभ्यमानेषु गद्यग्रन्थेषु प्राचीनतमः कः ? तस्य कर्ता च कः ?**

वासवदत्ता - सुबन्धुः ।

*** व्याकरणमहाभाष्ये उल्लिखितौ गद्यग्रन्थौ कौ ?**

कंसवधम् - बलिबन्धः च ।

*** पतञ्जलिना महाभाष्ये उदाहृताः आख्यायिकाः काः ?**

१. वासवदत्ता २. सुमनोत्तरा ३. भैमरथी ।

*** 'गउडवहो' ग्रन्थस्य कर्ता कः ?**

वाक्पतिराजः ।

*** 'राघवपाण्डवीयं' ग्रन्थस्य कर्ता कः ?**

कविराजः ।

*** कः प्रसिद्धः गद्यग्रन्थः कथानायिकायाः नाम्ना ख्यातः, यच्च नाम कालान्तरे गद्यग्रन्थस्य प्रतिनिधिः अभवत् ?**

कादम्बरी ।

*** कादम्बरी(गद्य)ग्रन्थस्य आकरग्रन्थः कः ?**

बृहत्कथा (पैशाचीभाषया लिखिता) ।

*** कादम्बर्याः उत्तरार्धं कः लिखितवान् ?**

बाणस्य पुत्रः - भूषणभट्टः ।

*** अत्यधिकसङ्ख्यया सुभाषितानां सङ्ग्रहः कस्मिन् ग्रन्थे कृतः ?**

सुभाषितरत्नभाण्डागारग्रन्थे।

(सामान्यतः १०,००० सुभाषितानि सङ्गृहीतानि।)

*** भर्तृहरिणा विरचितं शतकत्रयम्–**

नीतिशतकम्, शृङ्गारशतकम्, वैराग्यशतकम् ।

*** पद्य(श्लोक)रूपेण स्थिताः कोषाः केचन -**

अमरकोषः, मेदिनीकोषः, हलायुधकोषः,

त्रिकाण्डशेषकोषः ।

*** कर्त्रा अमरकोषस्य नाम किमिति निर्दिष्टम् ?**

नामलिङ्गानुशासनम् ।

# २. वेदोपनिषदादयः

*** वेदाः कति ? ते के ?**

चत्वारः - ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः ।

*** प्रसिद्धाः दश उपनिषदः -**

ईशावास्योपनिषत्, केनोपनिषत्, कठोपनिषत्, प्रश्नोपनिषत्, मुण्डकोपनिषत्, माण्डूक्योपनिषत्, तैत्तिरीयोपनिषत्, ऐतरेयोपनिषत्, छान्दोग्योपनिषत्, बृहदारण्यकोपनिषत् ।

अयं च श्लोकः -

ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरि ।
ऐतरेयश्च छान्दोग्यं बृहदारण्यकं तथा ।।

*** प्रस्थानत्रयं नाम किम् ?**

उपनिषदः, भगवद्गीता, ब्रह्मसूत्राणि ।

*** अ) याज्ञवल्क्य-मैत्रेयीसंवादः कस्याम् उपनिषदि अस्ति ?**

बृहदारण्यकोपनिषदि ।

आ) 'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मा अमृतं गमय' इत्येषः वाक्यपुञ्जः अपि बृहदारण्यकोपनिषदि एव अस्ति ।

इ) पूर्णमदः पूर्णमिदं पूर्णात् पूर्णम् उदच्यते ।
पूर्णस्य पूर्णम् आदाय पूर्णम् एव अवशिष्यते ।।

इति एषः मन्त्रः अपि बृहदारण्यकोपनिषदि एव पठितः ।

ई) उपनिषत्सु आकारेण महती उपनिषत् -
बृहदारण्यकोपनिषत् ।

*** प्रसिद्धा ईशावास्योपनिषत् कस्य वेदस्य सम्बन्धिनी ?**

शुक्लयजुर्वेदस्य वाजसनेयशाखायाः ।

*** प्रसिद्धाः काश्चन स्मृतयः -**

मनुस्मृतिः, याज्ञवल्क्यस्मृतिः, पराशरस्मृतिः,
देवलस्मृतिः, नारदस्मृतिः इत्यादयः ।

*** आस्तिकदर्शनानि दर्शनकाराः च -**

(यानि वेदप्रामाण्यम् अङ्गीकुर्वन्ति तानि आस्तिकानि)
साङ्ख्यदर्शनम् - कपिलः
योगदर्शनम् - पतञ्जलिः
न्यादर्शनम् - गौतमः
वैशेषिकदर्शनम् - कणादः
पूर्वमीमांसा - जैमिनिः
उत्तरमीमांसा - व्यासः

*** नास्तिकदर्शनानि एतानि -**

(यानि वेदप्रामाण्यं न अङ्गीकुर्वन्ति तानि)
चार्वाकदर्शनं, जैनदर्शनं, बौद्धदर्शनं च इति ।
बौद्धदर्शने चत्वारः भेदाः - माध्यमिकं, वैभाषिकं,
सौत्रान्तिकं, योगाचारं च ।
आहत्य नास्तिकदर्शनानि अपि षट् ।

* **एकैकस्य वेदस्य चत्वारः भागाः -**

संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषत् च ।

* **पञ्चायतनपूजायां के के पूज्यन्ते ?**

सूर्यः, गणपतिः, अम्बिका, शिवः, विष्णुः च ।

* **सप्तर्षयः के ?**

कश्यपः, अत्रिः, भरद्वाजः, विश्वामित्रः, गौतमः, जमदग्निः, वसिष्ठः च ।

अयं च श्लोकः -

कश्यपोऽत्रिः भरद्वाजः विश्वामित्रोऽथ गौतमः ।
जमदग्निः वसिष्ठश्च सप्तैते ऋषयः स्मृताः ।।

* **सप्तचिरञ्जीविनां नामानि -**

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ।।

* **पूजायां पञ्च उपचाराः के ?**

गन्धः, पुष्पं, धूपः, दीपः, नैवेद्यं च ।

* **चतुर्विधपुरुषार्थाः -**

धर्मः, अर्थः, कामः, मोक्षः च ।

* **चत्वारः आश्रमाः -**

ब्रह्मचर्यं, गार्हस्थ्यं, वानप्रस्थः, संन्यासः च ।

* **आगमेषु कति प्रकाराः ?**

त्रयः प्रकाराः - शैवागमाः, वैष्णवागमाः, शाक्तागमाः च इति ।

*** षोडश संस्काराः -**

| | | |
|---|---|---|
| १. गर्भाधानम् | २. पुंसवनम् | ३. सीमन्तः |
| ४. जातकर्म | ५. नामकरणम् | ६. कर्णवेधः |
| ७. निष्क्रमणम् | ८. अन्नप्राशनम् | ९. चूडाकर्म |
| १०. विद्यारम्भः | ११. उपनयनम् | १२. वेदारम्भः |
| १३. केशान्तः | १४. समावर्तनम् | १५. विवाहः |
| १६. अन्त्येष्टिः । | | |

*** पूर्वं वेदशाखाः (अध्ययनपरम्परापद्धतिः) कति आसन् ?**

सामान्यतः ११३०

*** इदानीं कति वेदशाखाः उपलभ्यन्ते ?**

केवलं १२ (ऋग्वेदे - २, यजुर्वेदे -५, सामवेदे - ३, अथर्ववेदे - २)

*** दह अवताराः के ?**

१. मत्स्यः २.कूर्मः ३. वराहः ४. नरसिंहः ५. वामनः ६. परशुरामः ७. श्रीरामः ८. कृष्णः ९. बुद्धः १०. कल्किः

अयं च श्लोकः -

मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बौद्धः कल्किः नमोऽस्तु ते ।।

*** त्रयः गुणाः केः ?**

सत्त्वगुणः, रजोगुणः, तमोगुणः ।

*** याज्ञवल्क्यस्य पत्न्याः नाम किम् ?**

मैत्रेयी, कात्यायनी ।

## ३. शास्त्राणि विज्ञानं च

*** शास्त्रैः अङ्गीकृतानि प्रमाणानि कानि ?**

प्रधानतया - (१) प्रत्यक्षम् (२) अनुमानम्
(३) उपमानम् (४) शब्दः इति चत्वारि ।

अन्ये केचन - (१) अर्थापत्तिः (२) अनुपलब्धिः
(३) पुराणम् (४) ऐतिह्यम् इत्येतानि च
प्रमाणत्वेन अङ्गीकुर्वन्ति ।

*** पाणिनिसूत्राणि सामान्यतः कति ?**

४०००

*** पाणिनिना विरचितस्य व्याकरणग्रन्थस्य नाम किम् ?**

अष्टाध्यायी ।

*** व्याकरणशास्त्रे प्रमाणभूताः त्रयः मुनयः के ?**

वार्तिककारः - वररुचिः

भाष्यकारः - पतञ्जलिः

सूत्रकारः - पाणिनिः

*** न्यायसूत्राणि लिखितवतः गौतमस्य अपरं नाम किम् ?**

अक्षपादः।

*** मरणसमये भगवन्नामस्मरणयोग्ये काले अपि कः 'परमाणुः परमाणुः' इदि जपन् आसीत् ?**

गदाधरः (क्रि.श. १७००)

* **अलङ्कारशास्त्रं प्रतिपादयत् अर्वाचीनं पुराणं किम् ?**

 अग्निपुराणम् ।

* **अलङ्कारशास्त्रस्य आद्यः ऋषिः भरतः कं ग्रन्थं विरचितवान् ?**

 नाट्यशास्त्रम् (३७ अध्यायाः सन्ति।)

* **भरतस्य रससूत्रं किम् ?**

 ''विभावानुभाव-व्यभिचारिभाव-संयोगात् रसनिष्पत्तिः''

* **'काव्यस्यात्मा ध्वनिः' इति केन उक्तम् ?**

 आनन्दवर्धनाचार्येण ।

* **रीतिसम्प्रदायस्य प्रवर्तकः कः ?**

 वामनः ।

* **शब्दे अर्थे च कति प्रकाराः ? ते के ?**

 त्रयः प्रकाराः -

| *शब्दः* | *अर्थः* |
|---|---|
| वाचकः | वाच्यः |
| लाक्षणिकः | लक्ष्यः |
| व्यञ्जकः | व्यङ्ग्यः |

* **नव रसाः -**

 १) शृङ्गारः २) वीरः ३) करुणः ४) अद्भुतः ५) हास्यः
 ६) भयानकः ७) बीभत्सः ८) रौद्रः ९) शान्तः ।

 अयं च श्लोकः -

 शृङ्गार-वीर-करुणाद्भुत-हास्य-भयानकाः ।
 बीभत्सरौद्रौ शान्तश्च रसाः नव प्रकीर्तिताः ।।

*** प्रथमसूत्राणि -**

i) अष्टाध्याय्याम् - वृद्धिरादैच् ।

ii) वेदान्ते (उत्तरमीमांसायां) - अथातो ब्रह्मजिज्ञासा ।

iii) पूर्वमीमांसायाम् - अथातो धर्मजिज्ञासा ।

iv) पातञ्जलयोगसूत्रेषु - अथ योगानुशासनम् ।

*** काश्यपसंहितायां कः विषयः उक्तः ?**

बालकरोग-सम्बन्धिनी चिकित्सा ( क्रि.श. ६०० )

*** चिवरवस्तु – किम् एतत् ?**

नेत्र-मस्तिष्क-प्रभृतीनां शस्त्रचिकित्सां विवृण्वन् कश्चन ग्रन्थः ।

*** प्राचीनभारतीयाः केचन वैद्यकीयपरिणताः -**

चरकः, सुश्रुतः, जीवकः, दिवोदासः ।

*** 'पैथागोरस्'सिद्धान्तः इति ख्यातः सिद्धान्तः भारतीयग्रन्थे बहुपूर्वम् एव कुत्र प्रतिपादितः आसीत् ?**

शुल्बसूत्रेषु (सामान्यतः क्रि.पू ७००-६००)

*** पै (π) परिमाणस्य आसन्नमूल्यं भारतीयः कः सूचितवान् ?**

आर्यभटः (क्रि.श.५००)

*** 'पञ्चाङ्गम्' इत्यत्र पञ्च अङ्गानि सन्ति । तानि कानि ?**

तिथिः, वासरः, नक्षत्रं, करणं, योगः च ।

*** पञ्च तन्मात्राणि कानि ?**

शब्दः, स्पर्शः, रूपं, रसः, गन्धः च ।

* **एशियाङ्सङ्केते अर्धगोलाकारकं यन्त्रम् एकम् आसीत् । तस्य नाम किम् ?**

  जयप्रकाशयन्त्रम् ।

* **पञ्च भूतानि कानि ?**

  पृथिवी, अप्, तेजः, वायुः, आकाशः च ।

* **पञ्च प्राणाः के ?**

  प्राणः, अपानः, व्यानः, उदानः, समानः ।

* **योगस्य अष्ट अङ्गानि कानि ?**

  (१) यमः (२) नियमः (३) आसनं (४) प्राणायामः
  (५) प्रत्याहारः (६) ध्यानम् (७) धारणा (८) समाधिः ।

* **अष्ट दिशः काः ?**

  (१) पूर्वा (२) आग्नेयी (३) दक्षिणा (४) नैर्ऋत्या
  (५) पश्चिमा (६) वायव्या (७) उत्तरा (८) ईशान्या ।

* **अतिविस्तृतस्य छन्दसः नाम किम् ?**

  विराट्कृतिः (१०६ अक्षराणि) ।

* **सप्त स्वराः के ?**

  १) षड्जः २) ऋषभः ३) गान्धारः ४) मध्यमः
  ५) पञ्चमः ६) धैवतः ७) निषादः

  अयं च श्लोकः -

  निषादर्षभ-गान्धार-षड्ज-मध्यम-धैवताः ।
  पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ।।

## ४. इतिहासः कालादयः च

*** संस्कृतस्य प्रथमः शिलालेखः कः ?**

रूद्रदाम्नः जुनागढ-शिलालेखः (क्रि.श. १)

*** भारतीयलिपीनां सर्वासां मूललिपिः का ?**

ब्राह्मी । (देवनागर्याः अपि एषा एव मूलभूता ।)

*** ब्राह्मी इति लिपेः नाम किमर्थम् आगतम् ?**

ब्रह्मीतः (प्रथमस्य जैनतीर्थङ्करस्य ऋषभदेवस्य पुत्री) आगता इत्यतः ।

*** सम्पूर्णतया मानवरक्तेन लिखिता बौद्धसूत्रविषयिणी हस्तप्रतिकृतिः इदानीं कुत्र अस्ति ?**

फिलासफिकल् सोसैटी - लास् एञ्जलीस् ।

*** व्यवहारे स्थितं हिन्दूशकद्वयं किम् ?**

विक्रमशकः - (प्रारम्भः - क्रि.पू. - ५७)

शालिवाहनशकः - (प्रारम्भः - क्रि.पू. - ७८)

*** शालिवाहनशकस्य क्रिस्तशकस्य च मध्ये कियत् अन्तरम् ?**

अष्टसप्ततिवर्षाणि ।

*** भगवद्गीतायाः अनुवादं प्रथमतया आंग्लभाषया कः कृतवान् ?**

सर् चार्ल्स् विल्कन् (१७७५)

* **नलन्दाविश्वविद्यालाये स्थितानां ग्रन्थालयानां नामानि कानि ?**

    रत्नरञ्जकः, रत्नोदधिः, रत्नगञ्जः ।

* **तक्षशिलां (यत्र सुप्रसिद्धः विश्वविद्यालयः आसीत्) कः निर्मापितवान् ?**

    श्रीरामस्य सहोदरस्य भरतस्य पुत्रः तक्षः ।

* **तक्षशिलायाम् अधीतवत्सु प्रसिद्धाः केचन -**

    पाणिनिः - (अष्टाध्यायीरचयिता)

    वररुचिः - (व्याकरणवार्तिककारः)

    जीवकः - (शल्यचिकित्सकः)

* **अमरकोषस्य प्रथमानुवादः कया भाषया कृतः ?**

    चीनीभाषया ।

* **राष्ट्रियं पञ्चाङ्गं कदा आरब्धम् ?**

    २२, मार्च् १९५७

* **कस्यां तिथौ भारतं स्वतन्त्रम् अभवत् ?**

    आषाढ - अमावास्यायाम् ।

* **बौद्धपञ्चाङ्गानुगुणं वर्षारम्भः कदा ?**

    वैशाख-शुक्ल-पूर्णिमायाम् ।

* **जैनपञ्चाङ्गानुगुणं वर्षारम्भः कदा ?**

    दीपावलीदिने ।

* **भारतीयवैभवं वर्णितवन्तः चीनीयात्रिकाः के ?**

    फाहियान् (विक्रमादित्यस्य शासनकाले क्रि.श. ५ शतके)

ह्युयन्त्साङ्ग (हर्षवर्धनस्य शासनकाले क्रि.श. ७ शतके)
इत्सिङ्ग् (हर्षवर्धनस्य शासनकाले क्रि.श. ७ शतके)

*** देवनागरीलिप्याः सर्वप्रथमः उल्लेखः कुत्र लभ्यते ?**

नन्दिसूत्रेषु (जैनग्रन्थः एषः)

*** युगानि कति ? तानि कानि ?**

युगानि चत्वारि । तानि च - कृतयुगम्, त्रेतायुगम्, द्वापरयुगम्, कलियुगम् ।

*** कलियुगस्य आरम्भः कदा अभवत् ?**

क्रि.पू. ३१०१

*** चतुर्णां युगानां समूहेन एकं महायुगम् । इदानीं कतमं महायुगं प्रचलति ?**

२८ तमम् ।

*** एकैकस्य महायुगस्य परिमाणम् -**

४३,२०,००० मानववर्षाणि ।

*** एकस्मिन् मन्वन्तरे कति युगानि भवन्ति ?**

७१ महायुगानि ।

*** एकस्य ब्रह्मदिनस्य (कल्पस्य) परिमाणं किम् ?**

२० लक्षाधिक ४३ कोटिवर्षाणि ।

*** कल्पाः कति ?**

सप्त कल्पाः - १) पार्थिवः २) कौर्मः ३) अनन्तः ४) नृसिंहः ५) प्रियः ६) श्वेतवराहः ७) अमरः ।

*** इदानीं कः कल्पः प्रचलति ?**

श्वेतवराहकल्पः ।

*** गणितक्षेत्रे विज्ञानक्षेत्रे च भारतीयानां वैशिष्ट्यम् -**

१) शून्यस्य (०) अन्वेषणम् ।

२) हैन्दवाः अङ्काः (१, २, ३.....)

३) दशमानपद्धतिः ।

४) बीजगणितम् ।

५) आयुर्वेदवैद्यपद्धतिः ।

६) अणुसिद्धान्तः ।

७) योगपद्धतिः - इत्यादीनि ।

*** अस्माकं प्राचीनसंस्कृतेः अवशेषाः कुत्र कुत्र लब्धाः ?**

१) हरप्पा २) मोहञ्जोदारो ३) लोथाल् ।

*** भारतस्य प्रथमः उपग्रहः कस्य प्राचीनज्योतिषिकस्य नाम्ना अङ्कितः अस्ति ?**

आर्यभटस्य नाम्ना ।

## ५.  भौगोलिकम् इतराणि च

* **गुप्तगामिनी नदी का ?**

  सरस्वती ।

* **प्राचीनभारतस्य प्रसिद्धविश्वविद्यालयाः, तेषां स्थानानि च -**

  काशी - उत्तरप्रदेशे ।

  तक्षशिला - (इदानीन्तने) पाकिस्थाने ।

  अयोध्या - उत्तरप्रदेशे ।

  गुणशीला - (महिलाविश्वविद्यालयः) बिहारप्रान्ते ।

  कुण्डिनपुरं - (व्यायामशिक्षणार्थं) बिहारप्रान्ते । वैशालीसमीपे ।

  मथुरा - उत्तरप्रदेशे ।

  नलन्दा - बिहारप्रान्ते ।

  काञ्ची - तमिलुनाडुप्रान्ते ।

  वल्लभी - सौराष्ट्रे (गुजरात्प्रान्ते) ।

  उदन्तपरी - बङ्गालप्रान्ते नवद्वीपे ।

  विक्रमशिला - बिहारप्रान्ते ।

  जगद्धला - बङ्गालप्रान्ते ।

  मिथिला - बिहारप्रान्ते ।

  नवद्वीपं (नदिया) - बङ्गालप्रान्ते ।

  सारनाथः - उत्तरप्रदेशे ।

  उज्जयिनी - मध्यभारतप्रान्ते ।

* **शङ्कराचार्येण स्थापिताः चत्वारः मठाः कुत्र कुत्र सन्ति ?**

  उत्तरदिशि - बदरी - उत्तरप्रदेशे ।

पश्चिमदिशि - द्वारका - गुजरात्प्रान्ते ।
दक्षिणदिशि - शृङ्गेरी - कर्णाटके ।
पूर्वदिशि - पुरी - ओरिस्साप्रान्ते ।

*** सप्त द्वीपानि कानि ?**

१) जम्बूद्वीपम् २) प्लक्षद्वीपम् ३) शाल्मलीद्वीपम्
४) कुशद्वीपम् ५) क्रौञ्चद्वीपम् ६) शाकद्वीपम्
७) पुष्करद्वीपम् ।

*** नव वर्षाणि (जम्बूद्वीपस्य भागाः) कानि ?**

१) इलावृतवर्षम् २) हरिवर्षम् ३) रम्यकवर्षम्
४) किन्नरवर्षम् ५) हिरण्मयवर्षम् ६) कुरुवर्षम्
७) केतुमालवर्षम् ८) भद्राश्ववर्षम् ९) भारतवर्षम् ।

*** भारतवर्षस्य परिमाणं किम् ?**

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तत् भारतं नाम भारती यत्र सन्ततिः ।।

*** जम्बूद्वीपस्थस्य भारतवर्षस्य कुलपर्वताः कति ? ते के ?**

सप्त कुलपर्वताः । ते च -
१) महेन्द्रः २) मलयः ३) सह्यः ४) शक्तिमान्
५) ऋक्षः ६) विन्ध्यः ७) पारियात्रः ।

*** प्राचीनकाले पूर्व-पश्चिम-समुद्रयोः किं नाम आसीत् ?**

पूर्वसमुद्रस्य नाम - गङ्गासागरः ।
पश्चिमसमुद्रस्य नाम - सिन्धुसागरः ।

*** द्वादश ज्योतिर्लिङ्गानि, तेषां स्थलानि च -**

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालम् ओङ्कारममलेश्वरे ।।

परल्यां वैद्यनाथं च डाकिन्यां भीमशङ्करम् ।
सेतुबन्धे तु रामेशं नागेशं दारुकावने ।।
वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतुमीतटे ।
हिमालये तु केदारं घृष्णेशं च शिवालये ।।

*** एतानि पवित्राणि स्थानानि इदानीं भारते न सन्ति -**

मानससरोवरम् (चीनादेशे)
कैलासपर्वतः (चीनादेशे)
पाशुपतेश्वरः (नेपालदेशे)
गौरीशङ्करशिखरम् (नेपालदेशे)
तक्षशिलाप्रदेशः (पाकिस्थानदेशे)
सिन्धूनदः (पाकिस्थानदेशे)

*** अक्षौहिणीसेनायाः परिमाणम् -**

२१,८७८० रथाः  ६५,६१० अश्वाः
२१,८७० गजाः  १,०९,२५० पदातयः ।

*** भारतीय-कालगणनानुगुणम् अतीव लघुतमः कालः कः ?**

त्रुटिः X ३३७५१ = १ सेकेण्ड् ।

*** संस्कृतदिनं कदा आचर्यते ?**

श्रावणपूर्णिमायाम् ।

*** अद्वितीया संस्कृतदिनपत्रिका का ? सा कुतः प्रकाश्यते ?**

सुधर्मा - मैसूरुनगरतः ।

*** काश्चन मासिकपत्रिकाः -**

शारदा (पूणानगरतः)  संस्कृतश्रीः (तमिलुनाडुतः)
सर्वगन्धा (उत्तरप्रदेशतः)  भारती (जयपुरतः)
गैर्वाणी (आन्ध्रप्रदेशतः)  सम्भाषणसन्देशः (बेङ्गलूरुतः)

दिव्यज्योतिः (शिमलातः) भारतोदयः (हरिद्वारतः)

*** सचित्रा बालानां मासिकी पत्रिका का ?**

संस्कृतचन्दमामा ।

*** त्रैमासिक्यादिपत्रिकाः काश्चन -**

लोकसंस्कृतम् (पाण्डिचेरीतः)
विश्वभाषा (वाराणसीतः)
संवित् (मुम्बयीतः)
व्रजगन्धा (मथुरातः)
संस्कृतमञ्जरी (देहलीतः)

*** संस्कृतविश्वविद्यालयाः -**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी (उ.प्र.)
दरभङ्गासंस्कृतविश्वविद्यालयः, दरभङ्गा (बिहार)
सदाशिवसंस्कृतविश्वविद्यालयः, पुरी (ओरिस्सा)
शङ्कराचार्यसंस्कृतविश्वविद्यालयः, कालटी (केरल)
महेन्द्रसंस्कृतविश्वविद्यालयः, कठमण्डू (नेपाल)
लालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्
(मानितः विश्वविद्यालयः) नवदेहली (देहली)
राष्ट्रियसंस्कृतविद्यापीठम् (मानित-विश्वविद्यालयः)
तिरुपति (आ.प्र.)

(अन्ये अपि केचन विश्वविद्यालयाः स्थाप्यमानाः सन्ति अपि ।)

*** प्राचीना कोषाः केचन -**

वाचस्पत्यम्, अमरकोषः, मेदिनीकोषः, वाचस्पत्यम्,
शब्दकल्पद्रुमः, शब्दार्थचिन्तामणिः ।

*** आधुनिकाः कोषाः केचन -**

संस्कृत-इंग्लीष्-कोषः - वि.एस्.आप्टे
इंग्लीष्-संस्कृत-कोषः - ,,
संस्कृत-इंग्लीष्-कोषः - मोनियर् विलियम्स्
संस्कृत-इंग्लीष्-कोषः - मेक्डोनेल्
संस्कृत-कन्नड-कोषः - चक्रवर्ति
श्रीनिवासगोपालाचार्यः

*** संस्कृतकार्यर्थं स्थितानि कानिचन संस्थानानि (अकाडमी) -**

देहली-संस्कृत-अकाडमी,
उत्तरप्रदेश-संस्कृत-अकाडमी
राजस्थान-संस्कृत-अकाडमी
मध्यप्रदेश-संस्कृत-अकाडमी

*** आधुनिकाः केचन संस्कृतकवयः, तेषां कृतयः च -**

जग्गूवकुलभूषणः - अद्भुतदूतम्, शृङ्गारलीलामृतम् इ.
(जग्गू आळवार् अय्यङ्गार)
श्रीधरभास्करवर्णेकरः–शिवराज्योदयः,
जवाहरतरङ्गिणी इ.
वरवर्णिनी - दयासहस्त्रम्
वासिष्ठगणपतिशास्त्री - पूर्णा, उमासहस्त्रम् इ.
क्षमाराव् - स्वराज्यविजयः, रामदासचरितम् इ.
म. रामशास्त्री - मेघप्रतिसन्देशः, भैमीपरिणयः इ.
कण्टकार्जुनः - कण्टकाञ्जलिः
रामशास्त्री - सीतारावणसंवादझरी

*** संस्कृतवाक्यानि प्रतीकेषु उपयुक्तानि -**

सत्यमेव जयते - भारतसर्वकारः ।
नभःस्पृशं दीप्तम् - भारतीयवायुदलम् ।
योगक्षेमं वहाम्यहम् - जीवविमासंस्था ।
शं नो वरुणः - भारतीयजलसेना ।
बहुजनहिताय - आकाशवाणी ।
न हि ज्ञानेन सदृशम् - मैसूरुविश्वविद्यालयः ।
ज्ञानं विज्ञानसहितम् - बेङ्गलूरुविश्वविद्यालयः ।
योऽनूचानः स नो महान् - राष्ट्रिय-संस्कृत-संस्थानम् ।
तन्नो हंसः प्रचोदयात् - रामकृष्णाश्रमः ।
सत्यं शिवं सुन्दरम् - दूरदर्शनम् ।

*** कर्णाटके सङ्घटनात्मकतया कार्यं कुर्वत्याः परिषदः पूर्णनाम किम् ?**

अखिल-कर्णाटक-संस्कृत-परिषत् ।

*** संस्कृतार्थं कार्यं कृतवन्तः विदेशीयाः केचन -**

म्याक्स्मूलर्, मोन्युअर् विलियम्, विल्सन् , ब्लूम्फील्ड्, मेक्डानेल्, विट्निं, कीत्, विण्टर्निट्स् इत्यादयः ।

*** वैमानिकविषयाः एतेषु पुस्तकेषु प्रस्तुताः सन्ति -**

१) वैमानिकशास्त्रम् २) यन्त्रसर्वस्वम्
३) विमानचन्द्रिका ४) आकाशयानरहस्यम्
५) व्योमयानतन्त्रम् ६) व्योमयानार्कप्रकाशः ।

*** केचन वैज्ञानिकग्रन्थाः, तत्कार्तारः, प्रतिपादितविषयाः च -**

१) अंशुबोधिनी - भरद्वाजः
सौरशक्तिः, प्रकाशः, उष्णताः, वर्णः, इत्यादयः ।
२) नारायणसूक्तम् - भरद्वाजः

रक्तपरिचलनं, शरीररचनम् इत्यादयः ।

३) विश्ववादम् - भरद्वाजः
रसायनशास्त्रम् ।

४) सूपशास्त्रम् - सुकेशः ऋषिः
पाकविज्ञानम् ।

५) गरुडम् - वल्लमहर्षिः
प्रतिविषादिरसायनशास्त्रीयाः विषयाः ।

६) अक्षरलक्षगणितशास्त्रम् - महर्षिः वाल्मीकिः
(रामायणकर्ता अन्यः)
गणितस्य ६४ सिद्धान्ताः इत्यादयः ।

७) अनुकरणशब्दशास्त्रम् - कान्दीकमहर्षिः
प्राकृतिकशब्दाः, प्रतिध्वनिः इत्यादयः ।

८) चित्रकर्म - भीममहर्षिः
चित्रनिर्माणं, भावचित्रग्रहणम्, (photography)

९) लोहतन्त्रम् - शाकटायनः
रससिद्धान्तः, लोहादिधातवः इत्यादयः ।

१०) शक्तितन्त्रम् - अगस्त्यमहर्षिः
शक्तिमूलानि - सौरशक्तिः, विद्युत्, चुम्बकशक्तिः इत्यादयः ।

११) अप्तत्त्वप्रकरणम् - आश्वलायनमहर्षिः
विविधस्नानानि, तत्प्रयोजनानि इत्यादयः ।

१२) मेघोत्पत्तिप्रकरणम्
६४ मेघप्रकाराः, स्तनितानि, तटित् इत्यादयः ।

१३) अश्वचिकित्साशास्त्रम् - शालिहोत्रमहर्षिः
अश्ववैविध्यम्, अश्वशिक्षणं, चिकित्सा इत्यादयः ।

* * *